महावाक्यविवरणम्
ऋग्वेदे प्रज्ञानशब्दनिर्णयः प्रथमसिद्धान्तः ॥ १॥

ऋग्वेदानन्दशब्दव्याख्यानमिति द्वितीयसिद्धान्तः ॥ २॥

ऋग्वेदस्य ब्रह्मशब्दनिर्णयस्तृतीयसिद्धातः ॥ ३॥

यजुर्वेदिकाहङ्कार शब्दनिर्णय शोधनं चतुर्थ सिद्धान्तः ॥ ४॥

यजुर्वेन्दसम्बधिब्रह्मशब्दनिर्णयः पञ्चमसिद्धान्तः ॥ ५॥

यजुर्वेद अस्मि शब्दनिर्णयः इति षष्ठः सिद्धान्तः ॥ ६॥

सामवेद तत्पदप्रकारः सप्तमसिद्धान्तः ॥ ७॥

जगत्कारणभूतं गुणसाम्य प्रकृति कपिलोऽष्टमः सिद्धान्तः ॥ ८॥

सामवेदस्य त्वं पदविशेषणं नवमः सिद्धान्तः ॥ ९॥

सामवेदवाक्यस्य तत्पदत्रयव्याख्यानप्रकारेण
जीवेश्वरब्रह्मनिर्णयो दशमसिद्धान्तः ॥ १०॥

दृष्टादृश्यविवेकाद्येकादशसिद्धान्तः ॥ ११॥

सामवेदवाक्यनिरूपणं सामवेदवाक्यपदत्रयव्याख्याननिर्णयो
नाम द्वादशसिद्धान्तः ॥ १२॥

अयं शब्दनिर्णयोऽथर्वणवाक्यशब्दव्याख्यानं
नाम त्रयोदशः सिद्धान्तः ॥ १३॥

आत्मशब्दनिर्णयोऽथर्वणवेदार्थवाक्यगतात्मशब्दनिर्णयो
नाम चतुर्दशसिद्धान्तः ॥ १४॥

वेदान्तप्रकरणेऽथर्ववेदवाक्यगतात्मब्रह्मशब्दनिर्णयो
नाम पञ्चदशसिद्धान्तः ॥ १५॥

ऋग्वेदे प्रज्ञानशब्दनिर्णयः प्रथमसिद्धान्तः ॥ १॥
अथ महावाक्यविवरणप्रारम्भः ॥

श्रीगणेशाय नमः ।
अथात्ममहावाक्यार्थविवरणं कथयति समस्तविषयवासनाविनिर्मुक्तः
स परमहंसः केवलनिर्विशेषः ब्रह्मचिन्तनमात्रेणावतिष्ठते
स परमहंसः यत्र कुत्र तिष्ठति किं करोति
केवलद्वादशमहावाक्यविवरणं करोति किं विवरणं को विचारः
तन्महावाक्यं कीदृशं तत्रोपपादयति वाक्यानि आदौ ऋग्वेदस्य
प्रज्ञानमानदं ब्रह्माहं ब्रह्मास्मीति यजुर्वेदस्य तत्त्वमसीति
सामवेदस्य अयमात्माब्रह्मेति अथर्ववेदस्याहम्ब्रह्मास्मीति
यत्परम्ब्रह्मेत्यादि द्वादशमहावाक्यैर्ब्रह्मविचारः
तत्रादौ ऋग्वेदे ब्रह्मज्ञानशब्दस्य व्याख्यानं क्रियते
एकमेवाद्वितीयं ब्रह्मेति सिद्धान्तः
प्रज्ञानं स्वतश्चैतन्यं तद्विशेषा अनेक प्रकारा
तन्मध्ये यथाबुद्ध्यनुसारेण व्याख्यानं क्रियते
प्रकृष्टमुत्कृष्टं ज्ञानं प्रज्ञानं उपाधिरहितं
स्वतश्चैतन्यं कालत्रयरहितं अवस्थात्रयरहितं विनिर्मुक्तं
स्वतत्रं ज्ञानं तत्प्राज्ञानं नाम यत् ज्ञानेन तु मायाचैतन्यं भवति
यत् ज्ञानेन चतुर्विंशतितत्त्वचैतन्यं भवति
किमिव सूर्याच्चक्षुखि अग्निपात्रमिव चुम्बकलोहमिव
सूत्रधारचित्रमिव काष्ठाग्निरिव पुरुषच्छायेव
वातरेणुरिव धनुर्धरबाण इव वृक्षच्छायेव
अमुनाप्रकारेण परापश्यन्तीमध्यमावैखरीरूपेण चैतन्यं समस्तजगत्
प्रपञ्च उत्पद्यते ज्ञानशक्ति इच्छाशक्ति क्रियाशक्तिस्वरूपेण
चैतन्यं जगदाकारं भवति अत एव वासुदेवः परब्रह्मेति श्रुतिः
वसन्त्यस्मिन् भूता निवासुः वासुश्चासौ देवश्च वासुदेवः-
प्रज्ञाशब्देन भूतानां वसतेः अत एव वासुदेव उच्यते
वाक्पाणिपादपायूपस्थाख्यानि पञ्चकर्मेन्द्रियाणि
चतुष्टयान्तःकरणप्रेरकः अत एव निर्गतान्तःकरणेन
श्रोत्रद्वारेण शब्दग्रहणं करोति निर्गतान्तःकरणेन
चक्षुर्द्वारेण रूपग्रहणं करोति
निर्गतान्तःकरणेन नासिकाद्वारेण गन्धग्रहणं करोति निर्गतान्तःकरणेन
जिह्वाद्वारेण रसग्रहणं करोति निर्गतान्तःकरणेन त्वचाद्वारेण
स्पर्शग्रहणं करोति अत एव पञ्चज्ञानेन्द्रियप्रेरकाः
श्रोत्रन्त्वक्चक्षुर्जिह्वाघ्राणमिति पञ्चकर्मेन्द्रियप्रेरकाः
मनोबुद्धिरहङ्कारचित्तमित्यन्तःकरणगुणप्रेरकाः
पञ्चवायवश्चेति भेदेन द्विधा प्राणापान-
व्यानोदानसमाननागकूर्मकृकरदेवदत्तधनञ्जय इति वायवः
इत्यादि समस्त प्रपञ्चोत्पत्तिप्रलयात्मकं करोति

जगत्साक्षित्वेन पश्यति तत्प्रज्ञाननामधेयं ब्रह्म भवति
तस्मात्प्रज्ञानशब्देन ब्रह्मविशेषेण सर्वेश्वरः कथ्यते
तत्सूत्रधार ईश्वरः मायाविद्यानटीनृत्यं कारयति नट इव

इति ऋग्वेदे प्रज्ञानशब्दनिर्णयः प्रथमसिद्धान्तः ॥ १॥

ऋग्वेदानन्दशब्दव्याख्यानमिति द्वितीयसिद्धान्तः ॥ २॥
अतः परमानन्दशब्दनिर्णयः कथ्यते
आनन्दं ब्रह्मेति विजानीयात् आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते
आनन्देन जातानि जीवन्ति आनन्दे प्रलयन्ति अभिसंविशन्ति इति श्रुतेः
स्वस्वरूपं उपाधिरहितं आनन्दं करोति यदानन्दं भवति तदा अहमित्यात्मानन्दं
भवति अखण्डानन्दं निजबोधानन्दं कैवल्यानन्दं ज्ञानानन्दं सहजानन्दं
अच्युतानन्दं रामानन्दं वीर्यानन्दं सुखानन्दं
आनन्दव्यापकानन्दं श्रयानन्दं प्रकाशानन्दं भवति यस्मादाकाश आनन्दो न स्यात्
तर्हि प्राणस्यानन्दत्वं कथं सम्भवति जडत्वात् अत एव ब्रह्मानन्देन
जगदानन्दो भवति ब्रह्मानन्दं लब्ध्वा ऋतमानन्दो
भूत्वेतिश्रुतेः समस्तप्रपञ्चसहितानन्दः
यदानन्दः सत्तामात्रेण समस्तप्रपञ्चमानन्दयति
अत एवान्नमय-प्राणमय-मनोमय-विज्ञानमय-आनन्दमयः अत एव
पञ्चकोशात्मको जीव आनन्दं प्राप्नोति सच्चिदानन्दस्वरूपं परमात्मेति कथ्यते
इत्थं परमात्मानन्द सत्तामात्रेण मूलप्रकृतिरानन्दप्राप्तिर्भवति तत्कार्यमह-
दादि चतुर्विंशतितत्त्वानि स्त्रीलिङ्ग-पुल्लिङ्गरूपेण परस्परं मिथुनी भवन्ति
अत्यन्तमानन्दयति अत एव वैकुण्ठादि शेषनागपर्यन्तं समस्तजीवजाति-
देवदैत्यसिद्धगन्धर्वमुनियक्षतिर्यक् नागकीट-पतङ्ग-स्थावर-
जङ्गम-समस्तशिवशक्त्यात्मको भवतीति सत्यम्
तस्मात् एकाकी न रमते द्वितीयमिच्छति स एव आत्मा द्विधा भवति
पतिश्च पत्नी चेति अत एव आत्मव्यतिरेकेण
आनन्दत्वं न सम्भवति जडपदार्थत्वात्
स्थूलसूक्ष्मकारणमवस्थात्रयं चैतन्यं कैवल्यं ब्रह्म तुर्यावस्थामात्रं
आनन्दं सम्भवति अत एवानन्दो ब्रह्मेति सत्यम्
ऋग्वेदानन्दशब्दव्याख्यानमिति द्वितीयसिद्धान्तः ॥ २॥

ऋग्वेदस्य ब्रह्मशब्दनिर्णयस्तृतीयसिद्धातः ॥ ३॥
अतः परम्ब्रह्मशब्दनिर्णयः कथ्यते माया तु शेषनागपर्यन्न्तं
समस्तप्रपञ्चान्वयरूपेणावतिष्ठते
किमिव सूत्रे मणिगणा इव यस्मात् जगदोतप्रोतं ततः
अत ऊर्ध्वं मध्ये सम्पूर्णदेशकालवस्तुस्वरूपं समस्तप्रपञ्चगुण-
दोषरहितं निर्लेपमच्छेद्यमभेद्यमदाह्यमक्लेद्यमशोष्यं समस्तेषु

वस्तुषु अनुस्यूतं एकं समस्तानि वस्तूनि यन्न स्पृशन्ति वियद्वत्सदा-
शुद्धमच्छस्वरूपं स नित्योपलब्धिस्वरूपोहमात्मा इति भावः
सदसत् संसारसत्यता प्रतिभासमानत्वात् क इव यथा रज्जुसर्प इव
शुक्तिरजतमिव सरसिफेनमिव
नभोभ्रमिव कूटशब्देन मिथ्या माया प्रवर्तते
आकाशवद्व्याप्तं समस्तप्रपञ्चान्तर्यामित्वेन तिष्ठति
यत्सत्तायां जगत्सत्यता प्रतिभासतेमानं भवति
इति ऋग्वेदवाक्यत्रयपदार्था अवलोकनीयाः
काण्डत्रयं मन्त्रकाण्डं-ज्ञानकाण्डं-कर्मकाण्डं प्रतिभाति
एतेन परमात्मा सत्यतया उल्लसति पञ्चविंशतिसहस्राणि ब्रह्मवाचा भवति
विद्याशक्तियुक्ता परापश्यन्तीमध्यमावैखरीरूपेण अव्यक्तस्वरूपं व्यक्त-
स्वरूपरूपेण प्रकटी करोति प्रकृतियोगे परावाक् अव्यक्तरूपेण
बुद्धिरहिता नादरहिता क्षररहिता
बुद्धिरहिता केवलं चैतन्यमात्रं उल्लसति सैव वाक् अन्तःकरण-
चतुष्टयात्मकात्पुरुषसंयोगेन षड्जर्षभगान्धार-
मध्यमधैवतनिषादपञ्चमात्मिका परारूपा भवति
पश्यन्ति विचार ज्ञानमयं पराप्रज्ञाविचारः
य उपकरोति तेन विचारेण परब्रह्मप्राप्तिर्भवति
अपरं संसारमतीत्य सैव वाक्
नादमयपुरुषस्य संयोगेन मध्यमावाक् नादमयी भवति नादरूपेणोल्लसति
स नाद आत्मा संयोगादग्निवायुभ्यां उपेत्य द्वाविंशतिश्रुतिरूपत्वेन-
वाचोल्लसन्ति तथा चोक्तं शब्दब्रह्मणि निष्णातः परम्ब्रह्माभिगच्छति
परब्रह्मप्रतिपादकतया शब्दब्रह्म सत्यत्त्वं
प्रतिपाद्यते सा प्रज्ञा वैखरीवाक् केषाञ्चिन्मतेन ईश्वरव्यतिरेकेण
सर्वकर्तृत्वं अन्यस्य न सम्भवति तव्द्यतिरिक्तस्य जडत्वं
प्रतिसज्यते तथा च श्रुतिः स एव जीवो विचारः प्रसूतिप्राणेन घोषेण
गुहाप्रविष्टः मनोमयं सूक्ष्ममुपेति रूपं मात्रास्वरो वर्ण इति स विष्टः
इति श्रुतिः ईश्वरस्य प्रथमश्वासनिर्गतः प्रथम ओङ्कार इति
स एवाकारादि षोडशस्वराः ककारादि पञ्चविंशति स्पर्शाः
यकारादि दशानुस्वराश्च एवं प्रथमबीजरूपसहिता
द्विपञ्चाशद्वर्णात्मिका भवति वाणी
तदनन्तरं छन्दोमयं भवति ऋग्वेदयजुर्वेदसामवेदाथवर्णवेदेति
चत्वारो वेदा भवन्ति एतेभ्यः सर्वेभ्यः वेदेभ्यः
एवं चतुर्दशविद्या भवन्ति ताश्च पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः
वेदास्थानानि विद्याया धर्मस्य च चतुर्दशेति उपपुराणेतिहासोपवेदः
धनुर्वेदः आयुर्वेदः गान्धर्ववेदः मन्त्रवेदः
शास्त्रैर्नानाप्रकाराश्चतुर्दशविद्या भवन्ति
ताश्च विद्या ब्रह्मा चतुर्भिर्मुखैश्चतुरो वेदान्निरन्तरं अभ्यस्यति

पूर्वमुखेन ऋग्वेदः उत्तरमूखेन यजुर्वेदः
पश्चिममुखेन सामवेदः दक्षिणमुखेनाथर्वणवेदः
ऋतं बन्धीनि अङ्गानि दशर्नानि नैय्यायिकदर्शनं दक्षिणमुखात् निर्गतम्
वेदान्तदर्शनं पश्चिममुखान्निर्गतं साङ्ख्यपातञ्जलभाष्यदर्शनानि उत्तरमुखान्निर्गतानि
षड्दर्शनेषु भगवतः स्वरूपं वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्ध इति
चतुर्धा ब्रह्म प्रतिपाद्यते केचित्तत्रगुणो वासुदेवो देवता ऋग्वेदोवेदः सत्य-
युगं ब्राह्मणवर्णः सात्विकगुणः तपोनिष्ठा इति नैय्यायिकदर्शनप्रामाण्य-
प्रणवजप केवल ज्योतिर्मय ध्यानम्
सर्वं खल्विदं ब्रह्मेति ज्ञाननिष्ठा भेदो नास्ति इति ऋग्वेदस्य
ब्रह्मशब्दनिर्णयस्तृतीयसिद्धान्तः ॥ ३॥

यजुर्वेदिकाहङ्कार शब्दनिर्णय शोधनं चतुर्थ सिद्धान्तः ॥ ४॥
अतःपरं यजुर्वेदसम्बधिवाक्यनिर्णयः कथ्यते अहं ब्रह्मास्मीति श्रुतिः
अथाहं शब्दनिर्णयं वदति अहं जगत्कर्ता
अहं जगद्धर्त्ता अहं जगत्साक्षी अहं जगत्प्रेरकः
अहं जगद्भोक्तेति श्रुतिः मय्येव सकलजातं मयि सर्वं प्रतिष्ठितम्
मयि सर्वं लयं याति तद्ब्रह्मास्म्यहमद्वयम् इति श्रुतेर्वाक्यं प्रमाणम्
अहं शब्दो ब्रह्मणि रूढो भवति अहं सर्वस्य प्रभावो मत्तः सर्वं प्रवर्त्तते
इति भगवद्वाक्यप्रामाण्यात् अथवा अहमेवासमेवाग्रेनान्यद्यत्सदसत्परम्
पश्चादहमयमेतच्च योऽवशिष्येत सोस्म्यहम्
सृष्ट्यादौ सृष्टिमध्ये सृष्ट्यन्ते निःसत्वं प्रतिपाद्यते इति भागवते
अत एवाहं शब्देन विशेषेण ज्ञानं मयि सर्वमिदं प्रोतं सूत्रे
मणिगणा इव इत्युपनिषद्वाक्यप्रामाण्यात्
कथं स्वतश्चैतन्यात् यत्र स्वतश्चैतन्यं ततः स्वतःप्रकाशत्वं
स्वतन्त्रत्वं तत्रैव अहं शब्दः सम्भवति अन्यत्र कुत्रापि
न सम्भवति तद्व्यतिरेकेण स्थूलप्रत्यक्षादि समस्तपदार्थाजडा
अत एव मूलप्रकृतिः तदात्मत्वं चैतन्याभिमामनी भवति
अहं ईश्वर इति मन्यते तदा अहं शब्दः प्रकृत्यारूढो भवति
सप्रकृत्या त्रिगुणात्मिकया भवति तदा अहं शब्दः त्रिगुणात्मको भवति
तत्र सत्त्वगुणात्मको ब्रह्मविष्णुपदमानं करोति
रजोगुणात्मको ब्रह्माभिमानं करोति तत्र प्रकृतिकार्यं महत्वाभिमानं करोति
वासुदेवरूपेण महत्तत्त्वकार्यमहङ्काराभिमानं करोति
सङ्कर्षणरूपेण अहङ्कारकार्यचित्ताभिमानं करोति
प्रद्युम्नरूपेण चित्तकार्यबुद्ध्यभिमानं करोति
अनिरुद्धरूपेण बुद्धिकार्यं अभिमानं करोति देवतादिरूपेण
तत्कार्यं च शब्दादिविषयाभिमानं करोति नादरूपेण
शब्दस्पर्शरसरूपगन्धादिरूपेण तत्कार्यं ज्ञानेन्द्रियाभिमानं करोति
प्रवृत्तिस्वरूपेण तत्कार्यं च कर्मेन्द्रियाभिमानं करोति

क्रियारूपेण अत एव सदसदात्मकं जगत्स्थावर-
जङ्गमकीटपतङ्गाण्डजस्वेदजजरायुजोद्भिज्ज समस्तजन्तूनां चतुराशीति
लक्षयोनिं पृथक्पृथक् याति स्वभावेन जगदभिमानो न जायते
तत्सद्ब्रह्मात्मकं भवति ब्रह्मव्यतिरेकेण चैतन्यं न सम्भवति समस्त-
प्रपञ्चजडत्वात्ततो अभिमानो न सम्भवति
तस्य अभिमाने नित्यत्वं कथं सम्भवति अच्युतोऽहमनन्तोऽहं गोविन्दोऽहमहं हरिः
आनन्दोऽहमशेषोऽहमजोऽहममृतोऽस्म्यहम् नित्योऽहं
निर्विकारोऽहं निरञ्जनोऽहमित्यादि विशेषयति परमात्मा इत्यादि
वाक्येन अहंशब्दप्रमाणं भवति यथेश्वराभिमानो न सम्भवति
तथा कर्तैष्टाज्ञाताभोक्तेत्यपि न सम्भवति
जडत्वं प्राप्तः तथाभिमानं कुत्रापि न सम्भवति
यथा अमृतक न्यायेन सच्चिदानन्दस्वरूपः परमात्मा कथ्यते
चतुर्वेदप्रमाणम् अहं शब्दो ब्रह्मवाचको भवति
अहंशब्दात् मायोपाधिरहितम् अव्यक्तस्वरूपोऽहमभिमन्यते अन्तःकरण
व्यक्तिं करोति परापश्यन्तीमध्यमावैखरीरूपेण प्रकटी करोति
अहंशब्दनिर्णयात् परमात्माविशेषणं कथ्यते
तत्र प्रकृतिवादिनां मते अहं शब्दः
ब्रह्मणि न सम्भवति कथं निर्गुणः शब्दस्तु गुणः अनयोः
परस्परविरोधः तत्राहङ्कारशब्देन ब्रह्म सम्भवति
अहं शब्दे अक्षिमानलक्षणं मोक्षबाधकं रूपं कथं अहंशब्देन ब्रह्म सम्भवति
इत्येकाशङ्का अथ द्वितीयाशङ्का ब्रह्मैकं प्रपञ्चो नैकः कथं पृथक् ॥ २॥

अभिमानं सम्भवति यथा अनन्तघटेष्वनन्तजीवाः सम्भवन्ति
केषाञ्चिदाचार्याणां मतेन एतत्सत्यत्वं सावधानमिति शृणु यदि
ब्रह्मणि अभिमानो नास्ति अत एव यत्र चैतन्यं तत्रैवाभिमानत्वं सम्भवति
अत्र ब्रह्मचैतन्यत्वं स्वरूपं अत एवाहं शब्द वाच्यं ब्रह्मैव सम्भवति
नान्यत्र कुत्रापि इत्याशङ्का परिहृता अथ द्वितीयां शङ्कां परिहरति
ब्रह्म तदेकं प्रपञ्चास्त्वनेकाः कथं पृथक् ॥ २॥

अभिमानः सम्भवति ब्रह्म तदेकम्
तत्र दृष्टान्तमाह यथा सूर्यः एकश्चक्षुरनेकं तत्प्रकाशं करोति
यथाऽग्निरेकः अनेकोपाधि उष्णत्वं करोति एकश्चन्द्रो ज्योत्स्ना
अनेकाः सन्ति मृत्तिकैकैव घटास्त्वनेकाः
सूर्य एकश्च रश्मयस्तु अनेकाः अग्निरेक एव स्फुलिङ्गा
अनेकाः समुद्र एकश्च तरङ्गा बहवः बुद्बुदाश्चानेकाः
इत्येवममुनाप्रकारेणैकमेव ब्रह्म मायामयमनेकं
प्रपञ्चमनेकमग्निमानमुत्थापयति देहाभिमानोत्पादकः
स परमात्मा अहं शब्दवाच्यः अनन्तशक्तिः अहङ्कास्वरूपेण

प्रपञ्चमनुवर्तते तत्सृष्ट्वा तदेवानुविशतीति श्रुतेः
सर्वं खल्विदं ब्रह्मेति श्रुतेश्च इति पूर्वाद्याशङ्का परिहृता
यजुर्वेदिकाहङ्कार शब्दनिर्णयशोधनं चतुर्थसिद्धान्तः ॥ ४॥

यजुर्वेन्दसम्बधिब्रह्मशब्दनिर्णयः पञ्चमसिद्धान्तः ॥ ५॥
अतः परम्ब्रह्मनिर्णयः कथ्यते बृहत्वात् ब्रह्म तेन ब्रह्मशब्देन बृहत्
अस्थूलं रूपं परमहंस तद्व्यापकस्वरूपं पूर्णं सर्वानुस्यूतं स्थूलत्वादि
गुणरहितं देशतः कालतश्च अपरिमितं मर्यादारहितं
आकाशादि तत्त्वादीनि येन पूर्णेनाकाशपूर्णता भवति
यत्पूर्णतया पृथ्वीपूर्णता भवति यत्पूर्णतयाऽपाम्पूर्णता भवति
यत्पूर्णतया तेजःपूर्णता भवति
एवमाकाशादि समस्त प्रपञ्चाधारभूतं बृहत्वाद्ब्रह्मेत्युच्यते
सर्वाधारो निराधार इति श्रुतेः
यथा वृक्षच्छायायां वृक्षस्य सत्यता भवति
तथेश्वरसत्तायां भासमात्रायां जगत्सर्वत्वं प्रतीयते
अनन्तकोटिब्रह्माण्डप्रकाशः
अनन्तकोटिब्रह्माण्डप्रेरकः अनन्तकोटिब्रह्माण्डान्तवर्ती स निर्लेपः
अत्यन्तसूक्ष्मात्सूक्ष्मतरं सूक्ष्मममिति श्रुतेश्च अत्र केवलानुभवः
प्रमाणं स्वप्रकाशरूपं स्वचैतन्यस्वरूपेण आकाशवदखण्डदण्डायमानम्
ऊर्ध्वाधस्तिर्यक् मर्यादारहितं पूर्णब्रह्म केवलं
मोक्षस्वरूपं समो नागेन मशकेन सम एभिस्त्रिभिर्लोकैरितिश्रुतेः
एवमनेन प्रकारेण ब्रह्मशब्दः अखण्डानन्तस्वरूपवाचकः
ब्रह्मशब्देन परमात्मा विशेषेण विज्ञायते यजुर्वेन्दसम्बधि-
ब्रह्मशब्दनिर्णयः पञ्चमसिद्धान्तः ॥ ५॥

यजुर्वेद अस्मि शब्दनिर्णयः इति षष्ठः सिद्धान्तः ॥ ६॥
अथ परमस्मि शब्दनिर्णयः कथ्यते
अस्मि शब्देन युष्मदस्मत्प्रत्ययगोचरयोः
स्वरूपयोर्मध्येऽस्मत्प्रत्ययगोचरस्वरूपं अस्मि शब्दः प्रत्येति
अस्मदि अप्रयुज्यमानेऽपि अस्मि प्रत्ययो भवति अस्मि शब्दोऽहं प्रत्ययः
कोऽहमिति विचारः अहं शब्द आत्मवाचको भवति तत्र युष्मत्प्रत्ययगोचरं
प्रकृतिवाचकं परस्मैपदं अस्मि शब्देन प्रतीयते
तत्परामर्शविचारादहं ब्रह्म अपराप्रकृतिः
अस्मिपदेन अपरम्प्रकृतिस्वरूपं निरूप्यते तयोः परापरयोः
परस्परविरोधः ब्रह्मचैतन्यं प्रपञ्चस्तु जडः
जडचैतन्ययोरैक्यं न सम्भवति
ब्रह्मचैतन्याभिमानीत्यभिमानी प्रकाशाभिमानी
षड्विंशको महाविष्णुर्महागुह्यो महाहविरितिश्रुतेः

षड्विंशकोऽयं कथं पञ्चकर्मेन्द्रियाणि पञ्चमहाभूतानि
पञ्चतन्मात्राणि विषयाश्च अन्तःकरणचतुष्टयं अभिमानसंज्ञकम्
सत्वरजस्तम इति गुणत्रयरूपं तत्र मूलप्रकृतिः
समस्तस्वरूपं इति सर्वेषां भवति
तत्र मूलप्रकृतिः ब्रह्म ब्रह्मविषया
नित्यचैतन्यस्वरूपं माया परस्परं संश्लिष्टं भवति कूटस्थःसर्वसंश्लिष्टो
वाङ्मनोगोचरातिगः इति श्रुतेः तत्र दृष्टान्तमाह
यथा पयसि घृतमिव काष्ठेऽग्निरिव यथा तिलेषु तैलमिव
यथा पृथिव्यां गन्ध इव यथा जलेषु रस इव यथा वायौ स्पर्श इव
यथाऽऽकाशे शब्द इवाऽमुनाप्रकारेण
प्रकृतिपुरुषयोरन्योन्यानादि सम्बन्धो भवति
तदेतद्युक्तं ब्रह्म अक्रियमसङ्गं निर्लेप मोक्षस्वरूपमित्युक्तम्
अबन्धस्वरूपम् स्वप्रकाशस्वरूपं स्वतश्चैतन्यं माया तु जडस्वरूपा
अचैतन्यस्वरूपा यथा मृत्पिण्डस्य स्वक्रिया न सम्भवति
तथा मायाया अचैतन्येन आत्मक्रिया न सम्भवति
आदिकारित्वाच्च इति पूर्वोक्ता शङ्का परिहृता
अस्मि शब्देन अन्तर्व्यावर्तिशोधने हेतुभृतं साक्षात्कारोऽपरोक्षः
ज्ञानसाधनाऽस्मि शब्देनोच्यते तत्र पुरुषसंयोगेन प्रकृतिः
चैतन्यात्मतया कर्त्ता भवति ततः प्रकृतिक्रिया
सम्भवति वैकारिकी सम्भवति तत्र दृष्टातमाह
किमिव सूर्यमग्निरिव तत्र सूर्यस्थाने ब्रह्म
अग्निस्थाने मूलप्रकृतिः अग्निस्थाने कार्यं समस्तं
किमिव अग्निपात्रमिव चुम्बकलोहमिव अन्धपङ्गुन्यायेन
प्रकृतिपुरुषसंयोगेन
क्रियोत्पत्तिर्भवति एकज्ञाने बहुधा ज्ञानमूलमस्ति तदा नाना
चेष्टा भवति बन्धमोक्षस्वर्गनरकपापपुण्यमूर्खत्वपाण्डित्यविकारेण
ब्रह्मादि पिपीलिकापर्यन्त ज्ञानिस्वभावं पृथक् ॥ २॥

परमात्मा एक एव तस्य शोधनहेतुः क्षीरनीरमैक्यं कृत्वा तत्साधन-
करणपरमहंसमार्गो निरूप्यते
तत्र एकं पारमार्थिकं ज्ञानमेकं व्यावहारिकं तस्य शोधने हेतुः
अस्मि शब्दवाक्यं प्रमाणं वर्त्तते
पूर्वमुक्तं पञ्चविंशति तत्त्वानां ब्रह्मस्वरूपता
निराकरणं पूर्वं षड्विंशं ब्रह्म प्रतिपाद्यते तत्रादौ कर्मेन्द्रेय
वृत्तिशोधनं क्रियते कर्मेद्रियं ब्रह्म न सम्भवति कर्मेन्द्रियवृत्तिभेदात्
कथं वृतिभेदः वाचावक्तव्यक्रिया
भवति हस्ताभ्यां दानपानादि क्रिया भवति ॥ १॥

पादाभ्यां गमनक्रिया भवति ॥ २॥ पायोर्मलोत्सर्ग
क्रिया भवति ॥ ३॥ उपस्थात् मूत्रोत्सर्ग स्त्रीपुंसोरानन्दक्रिया च भवति ॥ ४॥

एवं क्रियं कर्मेन्द्रियं ब्रह्म न सम्भवति तर्हि
नेन्द्रिय ब्रह्म भवति चेत् न तत् ज्ञानेन्द्रियस्य वृतिभेदात् श्रोत्रेण
शब्दग्रहणं करोति चक्षुषा रूपग्रहणं करोति जिह्वया रसग्रहणं करोति
त्वचा स्पर्शग्रहणं करोति ॥ ५॥

एवं ज्ञानेन्द्रियं एकमेकं विषयग्रहणं करोति अल्पज्ञातत्वात्
जडत्वाच्च यत् शब्दग्रहणं करोति न तत् स्पर्शग्रहणं करोति
यत् स्पर्शग्रहणं करोति
न तद्रूपग्रहणं करोति यद्रूपग्रहणं करोति न तद्रसग्रहणं करोति
यद्रसग्रहणं करोति न तद्गन्धग्रहणं करोति
एकैकस्य ज्ञानेन्द्रियस्य नानेकतत्त्वज्ञानजानकत्वम्
ब्रह्म तु सर्वज्ञं सर्वेश्वरं सर्वनित्यं
सर्वेन्द्रियगुणद्रष्टृ सर्वप्रत्ययसाक्षीति श्रुतेः
तस्मात् ज्ञानेन्द्रियस्य ब्रह्मत्वं न सम्भवति तर्हि ब्रह्मणो देहः सम्भवति
इति चेत् न देहस्य षड्भावविकारित्वात् तस्य षड्भावाः
अस्ति जायते वर्द्धते अपक्षीयते विपरिणमते विनश्यति
एवं शीतोष्णसुखदुःखस्वमानापमानब्राह्मणादि कीटपतङ्गमशकपर्यन्ताः
समस्त स्थूलसूक्ष्मदेहधर्माः षड्भावविकाराः
इति श्रुतेः देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति इति
भगवद्वाक्यप्रामाण्यात् अयं तु शुद्धः बुद्धः
नित्यमुक्तः अखण्डानन्दैकरसः
षड्भावविकाररहितः तथा च भगवद्वाक्यं
न जायते म्रियते वा कदाचित् नायं भूत्वा भविता वा न भूयः अजो नित्यः
शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे
इति सर्वानुस्यूतो अखण्डदण्डायमानोऽस्ति
यथा समुद्रफेनबुद्बुदा उल्लसन्ति तथा सत्तामात्रेण
ब्रह्मादि कीटपतङ्ग समस्त देहेषु उदयति देहस्तत्र अस्तं याति
अत एव स्थूलदेह आत्मा न भवति अत एव शङ्कराचार्यैरुक्तं
वपुरिदमत्र मायात्मापेक्षाकोशेनात्मा जडप्रावः
प्रागुत्पत्तेश्च पश्चात्तदभावस्यापि
विमानत्वमिति तर्हि प्राण आत्मा इति चेत् न
प्राणस्तु वायुः क्षुत्पिपासा श्वासोच्छ्वास वृत्ति
पञ्चप्रकारः अपानस्त्वधोगतोत्सर्गं करोति ॥ १॥

समानस्त्वन्नपानादि पचनं करोति ॥ २॥

प्राणस्तु कामक्रोधलोभमोहोत्पादको भवति उदानस्तु
श्वासोच्छवासानामेकविंशतिसहस्राणिषट्शताधिकानि करोति ॥ ४॥

व्यानस्तु धावनोत्पतनप्रसरणादि समस्तेन्द्रियवृत्तिं करोति ॥ ५॥

आत्मा तु अचलः अखण्डः अक्रियः अजो नित्यः शाश्वतः समस्तः
प्राणादिवायुवृत्त्यत्पादकः श्वासोच्छवासरहितः
तत्प्रवर्तक एव तथा चोक्तं शङ्कराचार्यैः
कोशः प्राणमयो वायुविशेषो वायुवपुषावच्छिन्नः अस्य कथं आत्मता स्यात्
क्षुत्तृष्णाभ्यां उपेयुषः पीडामिति तस्मात्प्राण आत्मा न भवति
तर्हि मन आत्मा भवति चेन्न मनो ब्रह्मेति व्यजानात् इति श्रुतेः मनस्तु
सङ्कल्पविकल्पात्मकमिदं करिष्यामि वक्ष्याम्यहं अयं ब्राह्मणः
अयं क्षत्रियः अयं वैश्यः अयं शूद्र इति
नानाविकल्पसङ्कल्पत्वात् स्वर्गनरकबन्धमोक्षकल्पना-
जालजटिलं मनोनेकरूपाणि कल्पयति मनः समस्तेन्द्रियक्षोभकारकं
कामाद्युत्पादकं अजितेन्द्रियतानिमित्तं तपःक्षयकारकम् अत्यन्त
चपलरूपं पद्मपत्रं जलं प्राप्य यथा वायुं स्पृष्ट्वाऽश्वत्थपत्रं
चपलं तथा हृदयकमलमध्येऽत्यन्त चञ्चलं
तिष्ठति चन्द्रमा मनसो जात इति श्रुतेः आत्मात्वचलः
अक्षोभरूपः सर्वव्यापकः सर्वक्रियारहितः
सर्वदेशकालवस्तुपरिपूर्णश्चैतन्यमात्र
आत्मा नित्यमुक्तः मनसस्तु नित्यबन्धः तथा चोक्तं
शङ्कराचार्यैः यत्सङ्कल्पविकल्पैरणुपरिमाणं निरिन्द्रियत्वविभुः
अथ कथमात्मता स्याद्विकारशीलिस्य वृत्तिभेदं वदति
तस्मान्मन आत्मा न भवति
तर्हि बुद्धिरात्मा भवतीति चेन्न बुद्धिस्तु जीवरूप देवदत्त
विज्ञानं भवति विज्ञानमानन्दं ब्रह्मेति श्रुतेः तच्च
विज्ञानं देशतः परिच्छिन्नं कालतः परिच्छिन्नं यद्दृश्यं
तत्परिकल्पयति यच्छ्रुतं तत्कल्पयति अदृश्यं
श्रुतं ज्ञानं नातिबुद्धिस्तु त्रिगुणात्मिका भवति
सात्विकीबुद्धिर्देवतोपासनं करोति
धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिनिमित्तार्थे
सात्विकी बुद्धिः प्रवर्तते
तत्र राजसीबुद्धिर्विषयभेदात् निवर्त्तते पुष्पचन्दनवनितादि
विषयान् करोति विषयाश्च शब्दस्पर्शरूपरसगन्धादयः
सविलासबुद्धिर्नानाभेदबुद्धिः

शुक्लकृष्णलोहितादिक नानाभावान्कल्पयतीति राजसीबुद्धिः
तामसीबुद्धिस्तु निद्रालस्यमैथुनादिकधर्मे प्रवर्त्तते
कामक्रोधलोभमोहहर्षशोकविषादे प्रवर्त्तमानापरस्परवैर-
बुद्धिरत्यन्तमूढा विवेकशून्या तामसीबुद्धिः
तस्मादात्मा स्वतश्चैतन्यप्रकाशरूपः
ज्ञानानन्दमयः समस्तप्रपञ्चक्रियारहितः
तुर्यावस्थामात्रमवतिष्ठते देशकालवस्तुतोऽपरिच्छिन्नः समस्त-
प्रपञ्चज्ञानोत्पादकस्वरूपः समस्तविषयप्रकाशकारणं स परमात्मा
इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः
मनसस्तु पराबुद्धिर्योबुद्धेः परतस्तु सः
इति भगवद्वचनं प्रमाणम् तस्मादात्मा बुद्धिर्न भवति
तर्हि अहङ्कार आत्मा भवतु अहङ्कारस्तु अहन्ता ममता भवति अहं त्वं
तव मम बहुधा नानाजीवयोनिशरीरलक्षणानि तत्
ज्ञानस्वभावाभिमानो बहुधोल्लसति अहं सुखी अहं दुःखी अहं कृशः
अहं स्थूलः अहं मूकः अहं जडः अहं पण्डितः अहं मूर्खः
अहं राजा अहं भृत्याः अहं श्रोत्रियः अहं ब्राह्मणः
अहं क्षत्रियः अहं वैश्यः अहं शूद्रः अहमीश्वरः
अहं दरिद्रः इत्यादि विकल्पसङ्कल्पः सहस्रवर्ति
मम भार्या मम पुत्रः मम धनं मम क्षेत्रमित्यादि युष्मत्प्रत्ययेन
नानाप्रकार ब्रह्मादिकीटपतङ्गपर्यन्त नानाभेदककल्पनां
करोति तस्मादात्मा स्वजातिभेदरहितः स्वगतपरगतभेदरहितः
एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन इति श्रुतिवाक्यं प्रमाणम्
आत्मा ब्रह्मादिकीटपर्यन्तं
जगत्समग्रप्राणिमात्रस्यां अन्तर्यामित्वेन तिष्ठति तस्मादहङ्कार आत्मा न
भवति तर्हि चित्तमात्मा भवति इति चेत् चित्तं तु चैतन्यज्ञानं
भवति कदाचिदुदयं करोति कदाचित् अस्तं याति
यत् जाग्रदवस्थायां ज्ञानं तत्स्वप्नावस्थायां न भवति यत्
स्वप्नावस्थायां ज्ञानं तत्सुषुप्त्यवस्थायां न भवति
अन्योन्य ज्ञानवैलक्षण्यम् अवस्थाभेदेन तस्माच्चित्तज्ञानं विरुद्धम्
अत एव देशकालवस्तु
परिच्छिन्न्नं ज्ञानमेकरसस्वरूपं तस्मादात्माऽखण्डज्ञानः अवस्थात्रय
साक्षिकालत्रय साक्षिलिङ्गत्रय साक्षित्वेनावतिष्ठते
अत एव सर्वज्ञत्वमीश्वरत्वं सर्वनियन्तृत्वं
सर्वकर्तृत्वं स ईश्वरः कूटस्थो सर्व
संश्लिष्टो वाङ्मनोगोचरातिग इति श्रुतेः तस्माच्चित्तमात्मा न भवति
तर्हि मूलप्रकृतिरात्मा भवतीति चेत् न मूलप्रकृतिस्तु
अनादिसिद्धा भवति कस्मात् सूक्ष्मत्वात् अचलत्वात् अखण्डत्वात्
सर्वव्यापकत्वात् निर्लेपत्वात् सत्तायामनेकब्रह्माण्डमुल्लसति

सा माया चतुर्विंशतितत्त्वानां कारणस्वरूपं स्वस्वरूपेणाविकारि-
गुणत्रयकारणं समस्तविषयगोचरं समस्तकार्यभिन्नत्वेन तिष्ठति तस्मात्
माया यद्यपि शुद्धा भवति
तथापि दोषत्रयारोपणं क्रियते कार्येण कारणानुमानं भवति यस्य कार्यं जडं
तस्य कारणस्य जडत्वं भवति यथा बीजं तथा फलं कटुकं भवति
यथेक्षुस्तथा शर्करा स्वादुर्भवति
अत एव प्रकृतिकार्यं पृथ्व्यप् तेजोवाय्वाकाशमिन्द्रियान्तःकरण-
चतुष्टयं गुणत्रयं सर्वेषां जडत्वं दृश्यते
यस्य कार्यं जडं तस्य कारणस्यापि जडत्वं भवति
अत एव यस्य कारणं जडं तस्य कार्यस्य जडत्वं भवति
प्रसङ्गादन्यथाऽर्थोविरुद्धः प्रथमो दोषो
जडत्वं द्वितीयो दोषो विकारित्वं तृतीयो दोषो गुणत्वमिति
गुणदोषत्रयाणामारोपणं क्रियते सत्त्वं रजस्तम इति प्रकृतिगुणाः
दैवी ह्येषा गुणमयी मम माया दुरत्यया इति भगवद्वाक्यप्रामाण्यात्
तस्मान्माया गुणमयी इति सिद्धान्तः
तस्माद्ब्रह्मणस्तु अप्रकृतित्वं प्रतिष्ठति इति श्रुतेः
स आत्मा विकारीस्थूलादिगुणरहितं सच्चिदानन्दस्वरूपम्
आदित्यवर्णं तमसः परस्तात् इति श्रुतेः
अत एव परमात्मासाक्षात्कार समस्तप्रपञ्च परोक्षस्वरूपः
स्वयमपरोक्षो यथाऽऽदित्यः स्वप्रकाशं
करोति तथा ब्रह्म स्वप्रकाशमेव सर्वेषु तिष्ठति
ब्रह्म स्वतश्चैतन्यं इति लक्षणवृत्तिसाधनं कारणं
अस्मि शब्दनिर्णयो यस्मात्पञ्चकर्मेन्द्रियम्
पञ्चमहाभूताः पञ्चतन्मात्राणि अन्तःकरणचतुष्टयं
गुणत्रयं मूलप्रकृतिरित्यादि समस्तप्रपञ्चकार्यं
कारणात्मकं चासद्रूपं पञ्चकरणं सद्रूपं पञ्चकार्यं
तस्मादात्मा सदसत्परं जानीयात् सदसत्परमिति श्रुतेः
तस्मात् जाग्रत् स्वप्नसुषुप्त्याद्यवस्थात्रयसाक्षित्वेन तिष्ठति
कस्मात् स्वप्रकाशकत्वात् स्वतश्चैतन्यत्वात् सत्त्वादि-
गुणरहित्वात् स यस्मात्सर्वप्रपञ्चान्वयव्यतिरेकेण
तिष्ठति तस्मात् सर्वेन्द्रियगुणद्रष्टृ सर्वप्रत्ययलक्षणं इति श्रुतेः
तस्मात् ब्रह्मसत्तामात्रेणावतिष्ठते
समस्तविषयगोचरं तस्मादात्मा ज्ञानगम्यः पुरातन इति श्रुतेः
तस्मात्स्थूलसूक्ष्मकारणशरीर
आत्मा न भवति स्थूलदेहो विश्वाभिमानी ब्रह्मा देवता
स्थूलभोगो जाग्रदवस्था वैखरीवाणी
वैराटशरीरं पञ्चभूतात्मकं पञ्चमहाभूतलक्षणम्
पृथ्वीआपस्तेजोवायुराकाश इति पञ्चमहाभूतानि

वाक्पाणिपादपायूपस्थमिति पञ्चकर्मेन्द्रियाणि
श्रोत्रं त्वक् चक्षुर्जिह्वा घ्राणमिति पञ्चज्ञानेन्द्रियाणि
शब्दस्पर्शरूपरसगन्ध इति पञ्चतन्मात्राणि
अन्तःकरणचरतुष्टयं मनोबुद्धिश्चित्तमहङ्कार इति गुणत्रयं सत्त्वं
रजस्तम इति देवताः पञ्चदशदेवताः कर्मेन्द्रियाधिपतयोऽग्निरिन्द्रः
विष्णुः प्रजापतिर्मित्रावरुणादि
ज्ञानेन्द्रियाधिपतयो देवताः पञ्चदश दिक्वायुः सूर्यो
वरुणोऽश्विनौ श्रोत्राद्यन्तःकरणाधिपतयो
वासुदेवः सङ्कर्षणः प्रद्युम्नोऽनिरुद्ध इति
चित्तादि कालकर्मस्वभाव जीवरूप इति समस्तं यथा भवति
तथा जाग्रत्यवस्था कथ्यते प्राणापानव्यानोदानसमाननागकूर्म-
कृकरदेवदत्तधनञ्जया इति समस्त
कालसत्ता उल्लसन्ति कालनाड्यधिपतयः नाडीसङ्ख्या द्वात्रिंशत्सहस्राणि चर्मनाडी
शोणितनाडी शुक्रनाडी अस्थिनाडी मज्जानाडी
इत्यादि कालसत्तोद्भवति विलयं याति च
कर्मसूत्रं पापम्पुण्यंसुखदुःखे  इत्यादिकं विसृजति जीवः
इन्द्रियाधिपतिः अचेतनपदार्थस्य चेतनत्वर्त्ता इति जाग्रदवस्थानिर्णयः
अथ स्वप्नावस्थानिर्णयः क्रियते पञ्चप्राणादि वायवो दशेन्द्रियवृत्तयः
पञ्चविषया अन्तःकरणचतुष्टयं तत्र देवताचतुष्टयं
कालकर्मस्वभाव इति एकत्वं यथा भवति तथा लिङ्गशरीरं
कथ्यते हिरण्यगर्भस्तेजोमयो भवति
तेजोमयोऽमृतमय इति श्रुतेः अथ स्वप्नावस्थानिर्णयः कथ्यते
तेजसोभिमानी विष्णुर्देवता सत्त्वगुणः वासनामयो भोगः स्वप्नावस्थायां
मध्यमावाणी सूर्यस्तत्रात्मा इति स्वप्नावस्थानिर्णयः
अथ सुषुप्त्यवस्थानिर्णयः कथ्यते सुषस्यवस्थायामे-
तत्कारणस्वरूपी प्रज्ञाभिमानीश्वरो देवतानन्दो भोग्यः पश्यन्तीवाणी तमोगुणः
इति सुषुप्त्यवस्था निर्णयः अथ तुर्यावस्थानिर्णयः कथ्यते
तुर्यावस्थायां ब्रह्मस्वरूपिकेवलं चैतन्यमात्रं सर्वोपाधि-
विनिर्मुक्तं साक्षिमात्रं अवतिष्ठते यथा सूर्यः
प्रकाशं करोति तत्सत्तामात्रेण लोकानां चेष्टा वर्त्तते
तथेश्वरसत्तामात्रेण जगत् चेष्टां करोति
यथाऽग्निसंयोगेन पात्र उष्णत्वं भवति यथा चुम्बकसत्तामात्रेण
समस्तप्रपञ्चचैतन्यता भवति इति पिण्डब्रह्माण्डशोधनं
निमित्तार्थेऽस्मिशब्देनोत्पत्तिः कथ्यते इति
परब्रह्ममायासंयोगेन परापश्यन्तीमध्यमा-
वैखरीरूपेण मुखेन प्रकटी भवति दर्शनमीमांसा यजुर्वेद इति
अस्मिशब्दनिर्णयः इति षष्ठः सिद्धान्तः ॥ ६॥

सामवेद तत्पदप्रकारः सप्तमसिद्धान्तः ॥ ७॥
अतःपरं सामवेदे वाक्यनिर्णयः कथ्यते
सामवेदवाक्ये पदत्रयं तत्पदं त्वं पदं असि पदमिति तत्पदेनेश्वरः
त्वम्पदेन जीवो असिपदेन ब्रह्म तत्र जीवेश्वरयोरुपाध्यवभेदः
ब्रह्मणस्तु नास्ति ब्रह्मणोह्युपाध्यवच्छेद्यश्चेत् तत्र श्रुति
विरुद्धमिदम् एकमेवादितीयं ब्रह्म नेह नानास्ति किञ्चनेति
श्रुतेः सत्यमुपाधिभेदे कल्पितम् जीवत्व
ईश्वरत्वे ब्रह्मण उपाधिकल्पने द्वैत इत्युपाधिकम्
एकमनेकं वा वस्तुवृत्यं एकएवोपाधिः सः क उपाधिः
अनाद्यविद्यास्वरूपः सा च जीवेश्वराश्रया तद्विषयैव यथा
वृक्षच्छाया यथा गृहेन्धकारो यथा समुद्रफेनो
यथा नभस्यन्यत्तिष्ठति तथा ब्रह्मसत्तायां मायाकल्पिता
दैवी ह्येषा गुणमयी मम माया दुरत्यया
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते इति भगवद्वाक्यात्
तथोपनिषदि श्रूयते अजामेकां लोहितकृष्ण
२ शुक्लकृष्णां बह्वीं प्रजां जनयन्तीस्वरूपा
अजोह्येको जुषमाणो नु शेते जहात्येनां
भुक्तभोगामजोन्य इति तैत्तिरेयारण्यम् ऋग्वेदेऽपि श्रूयते
न तं विदाथ य इमा जजानाऽन्यद् युष्माकं अन्तरं बभूव
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति इति शिवशक्त्यायुक्त
इत्यादि व्याख्याप्रतिपादितत्वात् प्रकृतिः पुरुषश्चैव विद्ध्यनादी उभावपि
इति वाक्यात् प्रकृतिपुरुषयोस्तथा
वेदान्तेऽपि अनाद्यविद्यां वदन्ति तर्हि द्वैतोत्पत्तिर्भवति
अद्वैतं न स्यात् एतत्सत्यब्रह्माद्वैतमेवाविकारं
विकाररहितं स्वप्रकाशस्वरूपं स्वतश्चैतन्यस्वरूपं
अखण्डदण्डायमानं व्यापकं देशतः कालतो वस्तुभूतम्
अधऊर्ध्वतिर्यक् अनन्तं स परमात्मैक
एव तदुपाधिभेदेन त्रिविधा भवति
जीवेश्वरब्रह्मेति तत्र माया त्रिविधा भवति
अविद्यामाया जीवाश्रिता मायेश्वरश्रिता किञ्चिच्छक्तिस्तु
अर्धमात्रास्थिता नित्यायानुच्चार्या विशेषतः
इति सप्तशतिप्रामाण्यात् तन्मायाब्रह्मसत्तामात्रेण चेतना भवति
किमिवाग्निसत्तामात्रेण पात्रे यथोष्णता भवति यथा
सूर्यमणौ सूर्यकलायामग्नेरुत्पत्तिर्भवति निष्कारणम्
तथा ब्रह्मसत्तायां मायाविकारित्वं भवति तत्रविकारो द्विविधः माया
विद्या च तत्र मायाप्रतिबिम्बितं चैतन्यमीश्वर इत्युच्यते
माया स्वाश्रया व्यामोहिनी अविद्याजीव
व्यामोहिनी मायाप्रतिबिम्बचैतन्यमीश्वरो यस्य सर्वज्ञत्वं

सर्वेश्वरत्वं सर्वसंहारकत्वं
सर्वप्रकाशकत्वं सर्वप्रेरकत्वं स ईश्वरः
अणिमादि सिद्ध्यष्टकदाता तस्य नाम विष्णुरिति सत्त्वगुणःप्रधानं तस्य
स्वरूपत्रयं ब्रह्माविष्णूरुद्र इति तत्र जगदुत्पत्तिकारणं ब्रह्मा
रजोगुणप्रतिबिम्बितं चैतन्यं क्रियाशक्तिस्वरूपेण
जगदुत्पत्तिं करोति तस्य विष्णुस्वरूपं
तत्पद प्रथमांशो ब्रह्मा द्वितीयांशो विष्णुर्जगत्प्रतिपालकः
सत्त्वगुणप्रतिबिम्बितं चैतन्यं विष्णुरित्यभिधीयते
इच्छाशक्तिस्वरूपेण स वैकुण्ठाधिपतिः
तस्यांशावतारा मत्स्यकूर्मादयस्ते किमर्थ भवति
तत्रोत्तरमुच्यते यदा यदा हि धर्मस्य ग्लानिर्भवति
भारत अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्
इति भगवद्वाक्यात् श्रुत एवानन्तशक्तिरूपेण
युगपत्स्थावरजङ्गमप्रतिपालको भवति तत्पद द्वितीयांशः
अथ तत्पद तृतीयांशो रुद्र इत्यभिधीयते
तमोगुणप्रतिबिम्बितं चैतन्यमीश्रर इति कथ्यते
कालशक्तिस्वरूपेण स्थावरजङ्गमात्मकस्य
जगतः प्रलयं करोति भैरवाद्यवतारैरनन्तकालात्मा भवति
नमस्ते रुद्रमन्यव इति श्रुतेरिति तत्पद तृतीयोंशः
तत्पद मायाशबलं ब्रह्मेति अत एव मायाब्रह्म चेति शक्तिद्वयं निरूप्यते
मायाप्रतिबिम्बितं चैतन्यं ईश्वर इति कथ्यते स ईश्वरः
सूर्यकोटिप्रतीकाशो यमकोटिदुरासदः इति श्रुतेः अत एव विराडधिपतिः
मोक्षाधिपतिः ज्ञानाधिपतिर्महातत्त्वाधिपतिर्विराडधिपतिः
सर्वज्ञप्तिमनाधिबोधस्वतन्त्रनित्यत्वमलुप्तशक्तिः
अनन्तशक्तिं च विभोर्विदित्वा षट्बाहुरङ्गानि महेश्वरस्य
अत एव श्रुतिः सहस्रशीर्षापुरुषः सहस्राक्षः
सहस्रपात् इति श्रुतेः वैकुण्ठनाथो लोकान्सृजते लतातन्तुन्याये
न जगदुत्पत्तिर्भवति
जगदुत्पादनस्वरूपेण सृजति प्रतिपालयति संहरति योगमायारूढो भवति
तस्येश्वरस्यांशत्रयं ब्रह्माविष्णूरुद्र इति
स वैकुण्ठाधिपतिर्विष्णुरादि पुरुषोत्तमो नाम सत्त्वगुणात्मकस्तस्य वै
रजोगुणात्मको ब्रह्मा सत्यलोकाधिपतिस्तस्य वै तमोगुणात्मको रुद्रः
कैलासाधिपतिरत एव कारणोपाधिरीश्वरस्य कथ्यते
इति सामवेद तत्पद विशेषणव्याख्या इति सङ्क्षेपेण वेदान्तशास्त्रेण
तत्पद स्वरूपाभिव्यक्तिः कथ्यते सामवेद तत्पद प्रकारः सप्तमसिद्धान्तः ॥ ७॥

जगत्कारणभूतं गुणसाम्य प्रकृति कपिलोऽष्टमः सिद्धान्तः ॥ ८॥
अतःपरं त्वम्पदवाक्यनिर्णयः कथ्यते कार्योपाधिरयं जीवः

कारणोपाधिरीश्वर इति श्रुतेः तत्र कार्योपाधिचैतन्यं
जीवशब्दवाच्यमित्युच्यते स जीवो विद्याशक्तिप्रधानः
साऽविद्या पञ्चस्वरूपा कथ्यते तमस्तामिस्रः अन्धतामिस्रः मोहः
महामोहः इति पञ्चपर्वाऽविद्या शैशवावस्था कौमारावस्था
यौवनावस्था तरुणावस्था वृद्धावस्था इति
पञ्चावस्थासु यज्ज्ञानं तदविद्यास्वरूपं परमार्थरहितं
शैशवावस्थायां न किञ्चित् ज्ञायते केवलं स्तनपानं करोति
सुखादिकं न जानाति केवलं चेष्टामात्रं
करोति इति तमोगुणविद्यायाः शैशवावस्थाभिव्यक्तिर्भवति सम्मताऽविद्या
अथ कौमारावस्थायां तामिस्राविद्या किञ्चिद्देहाभिमानं करोति मम देहः
मम माता मम पिता मम दुःखं मम सुखं किञ्चित्
प्रज्ञायते परमार्थरहितं केवलं देहाभिमानं करोति
देहाभिमानमात्रमुज्जृम्भते सा कौमारावस्था
सम्बन्धिन्यविद्यासैव तामिस्रं ज्ञानं तस्य लक्षणं इति तामिस्रस्तल्लक्षणाविद्यांशः
यौवनावस्थायामन्धतामिस्रज्ञानं तस्य लक्षणं देहाभिमानमात्रमुज्जृम्भते वयं सुन्दरा
अहं यौवनवान् तत्र कामोद्भवं करोति अहन्तां ममतां करोति
मम पिता मम माता मम भार्या मम भ्राता मम भगिनीति नाना प्रकार कामोद्भवं करोति
स्वभार्यां परभार्यां न जानाति स्वधनं परधनं न जानाति
ते शब्दस्पर्शरूपरसगन्धाः पञ्चविषयाः तैः पीडिता
अत्यन्तदुःखप्राप्तिर्भवति अत एव अन्धतामिस्रं नाम
परमार्थरहितं केवलं अविद्यारूपं स एवान्धतामिस्रं नाम
अथ मोहलक्षणाविद्या केवलं देहाभिमानं करोति मम धनं मम पुत्रा
मम भार्या मम क्षेत्रमहं श्रोत्रियोऽहं ब्राह्मणो वयं क्षत्रिया वयं वैश्या
वयं शूद्रा इति नानाप्रकार सङ्कल्पविकल्पजालमध्ये पतति
अत्यन्तमोहोभ्रान्तिर्भवति तन्मोहस्वरूपमविद्या नाम
अथ वृद्धावस्थायां महामोहप्राप्तिर्भवति तन्महामोहलक्षणम्
अत्यन्त देहाभिमानो भवति पुत्रपौत्रक्षेत्रादावत्यन्तं ममता भवति
मम भृत्यादयो मम देशा मम सखा मम गोत्रं मम स्वजातीयो
विजातीय इति स्वपरस्मिन्नत्यन्तभेदवृत्तिर्भवति
अत्यन्तजाड्याधिकेऽपि मोह एवायं रक्षणीय इति देहाभिमानस्वरूपं
स्थूलोऽहं कृशोऽहं मूकोऽहं बधिरोऽहं इत्यभिमानग्रस्तो
भवति तदा अभिमानरूपा महामोहाविद्या पृथग् विद्यते स्वभावज्ञानेन
केवलं देहाभिमानमात्रं परमार्थरहितं देहाभिमानमुज्जृम्भते
एतज्ज्ञानं महामोहाविद्यालक्षणमहदविद्या-
परिच्छिन्नचैतन्यं जीवशब्दवाच्यमुच्यते
तत्र कार्यकारणैकत्वेन प्रपञ्चाधिष्ठितं चैतन्यं प्रवर्तते
तत्र किञ्चित्कार्यकारणलक्षणं कथ्यते कारणं
त्वेकं कार्यं त्वनेकं तत्र दृष्टान्तम् यथा मृत्तिकैकैवघटास्त्वनेकाः

सुवर्णमेकमलङ्कारास्त्वनेकाः चन्द्रमास्त्वेको ज्योत्स्नास्त्वनेकाः
पृथिव्येकागन्धास्त्वनेकाः सूर्य एको रश्मयस्त्वनेका उदकमेकं
रसास्त्वनेका वृक्ष एकः शाखास्त्वनेकाः कार्पास एको वस्राण्यनेकविधानि
एवममुनाप्रकारेण कारणमेकमेवकार्यं त्वनेकविधं कारणं तु मूलप्रकृतिरेकैव
जगत्कारणभूतं गुणसाम्य इति प्रकृति कपिलोऽष्टमः सिद्धान्तः ॥ ८॥

सामवेदस्य त्वं पदविशेषणं नवमः सिद्धान्तः ॥ ९॥
सा प्रकृतिस्त्रिधा भवति सात्विकी राजसी तामसी चेति सा प्रकृतिर्ब्रह्माश्रिता
भवति परमात्माश्रिता माया स्थितिकारणं इति श्रुतेः
सा माया जगत्कारणहेतुर्भवति प्रकृति कार्यं
महत्तत्त्वं महत्तत्त्वकार्यमहङ्कारोऽहंङ्कारकार्यं मनो मनःकार्यं
बुद्धिर्बुद्धिकार्यं शब्दादयो विषयाः
शब्दकार्यमाकाश आकाशकार्यं वायुर्वायुकार्यं
चाग्निरग्निकार्यमापोऽप् कार्यं पृथ्वी पृथिव्या
ओषधिवनस्पतयः ओषधिवनस्पतिभ्यः फलान्यन्नं चान्नकार्यं रसः
रसकार्यं रेतो रेतःकार्यं सप्तधातवस्तेषां संज्ञा रुधिरमांसादयो
वसात्वङ्मांसमेदोऽस्थिमज्जाशुक्राण्येते सप्तधातव एतद्धातुकार्यं
शरीरं एतद्धातुभिः समस्तजीवशरीरमारभ्यतेऽमुनाप्रकारेण
कार्यकारणात्मकं विश्वं संसारप्रपञ्चादि
शब्दैर्निरूप्यते इति तत्त्वसर्गनिर्णयः
अथ जीवनिर्णयः कथ्यते प्रथमकोशो ब्रह्म द्वितीयकोशो माया
तृतीयकोशो गुणत्रयं चतुर्थकोशो विष्णुः
पञ्चमकोश ईश्वरः षष्ठःकोशो रुद्रः सप्तमकोशः
सनकादयश्चत्वारोऽष्टमकोशो महीदासादयो नवमकोशः
स्वयम्भुवादयः दशमकोशः कश्यपादय एकादशकोशः
सरस्वती तदनन्तरं देवदैत्यगन्धर्वसिद्धयक्षराक्षसगुह्यक-
किन्नरमनुष्यपशुपक्षिमृगादयः
नागानद्योगिरयोद्रुमादि समस्त स्थावरजङ्गमाश्चतुरशीतिलक्ष जीवजन्तवः
खेचरभूचराः पृथिव्यादि सप्तसर्गलोकचरा असङ्ख्या
जीवयोनयो नानाविधावकाशालक्षणं कार्यस्वरूपमेव भवति
तदेतत्कार्याश्रितं चैतन्यं जीवशब्दवाच्यमुच्यते
पृथगभिमानलक्षणं कथ्यते यथा घट
भेदेनाकाशभेदोऽनेकधा घटाकाशमठाकाशादौ
महाकाशस्तु एक एव यथा अग्निरेकएव विस्फुलिङ्गास्त्वनेका यथा सूर्य एक एव
जले प्रतिबिम्बास्त्वनेकधोपाधिभेदेनैव जीवा अनन्ता भवति अमुना
प्रकारेण त्वम्पद तत्पदयोः परस्परवैलक्षण्यं भवति
उपाधिभेदेनैव वस्तुभूतं वस्तुतस्तावदेकमेव
वस्तुचैतन्यं सर्वत्रानुस्यूतमस्ति इति त्वम्पदशोधनं

सङ्क्षेपेणात एव तत्पद त्वं पदासि पदानां परस्परं भेदः कथ्यते
सामवेदस्य त्वम्पदविशेषणं नवमः सिद्धान्तः ॥ ९॥

जीवेश्वरब्रह्मनिर्णयो दशमसिद्धान्तः ॥ १०॥
अथ जीवेश्वरविभागः कथ्यते
एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन
इति श्रुतेर्विरुद्धार्थ सत्यपदत्रयं कथ्यते तत्त्वमसीति
सामवेदवाक्यमस्ति तस्य पदत्रयं कथ्यते तत्त्वमसीति
पदत्रयस्य व्याख्यानमेव क्रियते पदत्रयेण वस्तुत्रयं नोच्यते
किन्त्वेकमेव वस्तु जीवेश्वर ब्रह्मेति बुद्धिभेदेन
कार्योपाधिबिम्बं चैतन्यं जीवशब्दवाच्यं
कारणोपाधिप्रतिबिम्बितं चैतन्यमीश्वर शब्दवाच्यमुच्यते
कार्यकारणरहितं चित्स्वरूपमखण्डदण्डायमानं ब्रह्मासि पदवाच्यम्
अत एवासिपदेनैव ब्रह्मोच्यते तच्च ब्रह्मस्वरूपतः
परिपूर्णं भवति मायादि शेषप्रपञ्चविनिर्मुक्तं गुणदोषरहितं
केवलं सत्तामात्रमसिपदेन परं ब्रह्म चिदानन्दस्वरूपमुच्यते
तद्ब्रह्माकाशादि समस्त प्रपञ्च-
साक्षीभूतं जीवेश्वरयोर्नियन्तृ मायाविद्यायाः
प्रवर्त्तकं कालकर्मस्वभाव उपादानस्वरूपं यत्सत्तामात्रेण
समस्तप्रपञ्चान्तर्वर्तित्वेनोल्लसति
सर्वतः पाणिपादं तत्सर्वतोक्षिशिरोमुखम्
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति इति श्रुतेः
अत एव सर्वव्यापकत्वं तत्रोच्यते स्वतः
प्रकाशत्वं स्वतश्चैतन्यत्वं स्वतन्त्रत्वं स्वतःज्ञातृत्वं
स्वतःप्रतिपालनत्वं स्वतःसंहारकत्वं स परमात्मेति कथ्यते
अस्ति प्रशस्तप्रकृतेः परतस्तात् आदित्यवर्णं तमसः परस्तात् इति श्रुतेः
अत एव स परमात्मा समस्तविषयगोचरोऽत्यन्तसूक्ष्मात्सूक्ष्मतरो भवति
दूराद्दूरतरो यतो वाचो निवर्त्तन्तेऽप्राप्य मनसा सहेति श्रुतेः
अतः कारणात् त्वम्पद तत्पदासि पदादिना जीवेश्वर
ब्रह्मेति ब्रह्मसत्यत्वं प्रतिपाद्यते उपाधिभेदेनानन्ताः
कार्योपाधिरूपाश्चैतन्याधिष्ठिताः सुखदुःख पापपुण्य
स्वर्गनरक बन्धमोक्ष ज्ञानाज्ञानानि नानायोनिषु संसरन्ति
उत्क्रामन्ति च लिङ्गशरीर स्थूलशरीराभिमानः
स जीवात्मा पञ्चकोशाभिमानी वा
ते पञ्चकोशा भवन्ति अत एवान्नमयः प्राणमयः
मनोमयो विज्ञानमय आनदमय इत्यन्नमय प्राणमय
मनोमय विज्ञानमयानन्दमय पञ्चकोशानामेकैक
मन्तर्भाग् भवति विवेकात्प्रकाशात्प्रकाशितातात्मेति शङ्कराचार्यैश्चोक्तं

एतत्पञ्चकोशावेष्टित चैतन्यात्मा
स जीवशब्दवाच्यं जीवं करोतीति जीवशब्दवाच्यता
अथ जीवविशेषाः केवलमुपाधित्रामम्भिन्नं
न तु वस्तुभेदो वस्तुगत्यैकमेवचैतन्यै यथा घटाकाश मठाकाश महाकाशादिवत्
तत्रांशस्त्वे क एव तथा जीवईश्वरब्रह्मेति एकमेव वस्तु य ईश्वरः कर्त्तापालकः
संहर्ता सर्वमोक्षदाता नियन्ता समस्तानां जीवानां कर्मफलदाता स ईश्वरः
स वैकुण्ठनाथोऽनन्तकोटिब्रह्माण्डविग्रहस्तपसा
सत्यलोकमधिष्ठाता तिष्ठति परित्राणाय साधूनां
विनाशाय च दुष्कृतां धर्मसंस्थापनार्थाय सम्भवामि युगे युगे
इति भगवद्वाक्यप्रामाण्यात्
स ईश्वरो निर्विशेषः कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः
कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते इति शङ्करभाष्यप्रामाण्यात्
यथा घटभङ्गेनाकाशभङ्गो न
भवति अविद्यानिवृत्तिर्मोक्षः सा विद्याविलास-
निवृत्तिर्मोक्ष आनन्दप्राप्तिर्मोक्ष इति वा
ज्ञानं तु कैवल्यं इति श्रुतेः
आकाशशरीरं ब्रह्म अत एव तद्ब्रह्म त्वमसि सामवेदवाक्यस्य तत्पदत्रयव्याख्यान
प्रकारेण जीवेश्वरब्रह्मनिर्णयो दशमसिद्धान्तः ॥ १०॥

दृष्टादृश्यविवेकाद्येकादशसिद्धान्तः ॥ ११॥
सामवेदवाक्यस्य तत्पदत्रयव्याख्यानप्रकारेण

अथ प्रकारान्तरेण तत्त्वमसीति वाक्यव्याख्यानं
क्रियते तत्त्वमसीति श्रुतेः तच्छब्देन पूर्वं परामृश्यते
त्वं शब्देनापरं परामृश्यते तत्परस्परं विरुद्धं
तद्यत् ब्रह्म पूर्वं परामृष्टं एवमेवाद्वितीयं ब्रह्म नामरूपविवर्जितं
ब्रह्म शुद्धं बुद्धं मुक्तस्वभावम् आदित्यवर्णं
तमसः परस्तात् इति भगवद्वचनप्रामाण्यात्
समस्तप्रपञ्चसाक्षिभूतं केवलं तुर्यावस्थामात्रं
प्रतितिष्ठति स परमात्मा जीवो न भवति
कस्मात् अनन्तशक्तिमयत्वात् अनन्तप्रकाशमयत्वात्
अनन्तसुखमयत्वात् अनन्तानन्दत्वात् अनन्तकोटि-
ब्रह्माण्डाधारभूतत्वात् अनन्तकोटिब्रह्माण्डप्रकाशकत्वात्
अधोर्ध्वमध्ये यस्यान्तो नास्ति स अनन्त इत्युच्यते
ॐ खं ब्रह्मेति उपासीत इति श्रुतेः अत एव
जीवविकल्प ईश्वरविकल्प ब्रह्मविकल्प
इति विकल्पत्रयरहितं केवलं साक्षात्कारस्वरूपम् स परमात्मा
तत्पदेन विशेषित इति तत्पदार्थः अथ त्वं पदार्थव्याख्यानं

क्रियते त्वं पदमपरपरं अपरं च मायारूपं
सा मायाब्रह्माश्रिता ब्रह्मविषया यथा लूतातन्तुर्यथा गेहेऽन्धकारो
यथा वृक्षच्छाया तथा माया ब्रह्माश्रिता बह्मविषया भवति
सा माया त्वम्पदवाच्यमायावेष्टितं चैतन्यस्वरूपत्रयं पृथक् ॥ २॥

विश्वतैजसप्राज्ञःस्थूलसूक्ष्मकारणात्मकं
सत्वंरजस्तमो ब्रह्माविष्णुरुद्रो जाग्रत्स्वप्नसुषुप्तिः
श्वेतम्पीतङ्कृष्णं विराट्हिरण्यगर्भ कारणमाख्यानकृत त्रिविधा माया-
चेष्टित स्वरूपेण वटवृक्षवत् जले जलाशयवत् अत एव एकैव
मायाऽनन्ता पञ्चविंशतितत्त्वात्मकस्वरूप पञ्चविंशतितत्त्वानि
पञ्चकर्मेन्द्रियाणि च पञ्चज्ञानेन्द्रियाणि पञ्चमहाभूतानि
पञ्चविषयाः अन्तःकरणचतुष्टयं मूलप्रकृतिरित्यादि
समस्तं त्वम्पदवाच्यविशेषः
षड्विंशको महाविष्णुरिति श्रुतेः अत एव तत्पदेन ब्रह्म त्वम्पदेन मायाऽसिपदेन
जीवः शब्दब्रह्म अत एव सामवेद पूर्वपक्षः उत्तरपक्षश्च
पूर्वपक्षः जीवेश्वरो ब्रह्मनिर्णयेनैकमेव तद्ब्रह्म
त्रिविधा निरूप्यते उपाधिभेदेन विश्वस्तैजसःप्राज्ञः
विश्वो विश्वाश्रितः तैजस ईश्वराश्रितः प्राज्ञो ब्रह्माश्रितः
ब्रह्मांश ईश्वरः ईश्वरांशो जीवः
ममैवांशो जीवलोके जीवभूतः सनातन इति स्मृतेः
अत एव तत्पद त्वम्पदासिपदानां सत्यत्वं प्रतिपाद्यते
उपाधिभेदमात्रे निरूप्यते वस्तुगत्यैकमेवाद्वितीयं
एक एव हि भूतात्मा सर्वभूतेषु संस्थितः एकधा बहुधा चैव
दृश्यते जलचन्द्रवत् इति स्मृतेः पूर्वपक्षे
दृष्टान्त सिद्धान्तयोस्तत्वमसीति वाक्यस्यार्थद्वयं
अत उत्तरपक्षे दृक्दृश्यपदार्थनिर्णयः कथ्यते
दृष्टं ब्रह्म एकमेव एको देवः सर्वभूतान्तरात्मा इति श्रुतेः
तत्र दृष्टान्तमाह रविर्लोकचेष्टानिमित्तं यथेति स
परमात्मा शुद्धो बुद्धो मुक्तस्वभावो निर्गुणः
समस्तप्रपञ्चरहितः केवलमाकाशवद्व्यापकः
शब्दगुणकमाकाशं निःशब्दं ब्रह्म उच्यते इति शृणु
अत एव स परमात्मा स्वतश्चैतन्यः स्वप्रकाशो जीव
विकल्पद्वयरहितः ईश्वर विकल्पद्वयरहितः
कथं व्यापकत्वं यत्र व्यापकत्वं तत्र विकल्पो न सम्भवति
अनन्तशक्तिमयत्वात् अत एव ब्रह्मदृष्टा माया दृश्यादृश्यपदार्थः
किञ्चित्प्रत्ययादि समस्तप्रपञ्चकार्यं कारणात्मकः
इति दृष्टादृश्यविवेकाद्येकादशसिद्धान्तः ॥ ११॥

सामवेदवाक्यनिरूपणं सामवेदवाक्यपदत्रयव्याख्याननिर्णयो नाम द्वादशसिद्धान्तः ॥ १२॥
अथ तत्पदवाच्यः कथ्यते तत्पदेन ब्रह्म त्वम्पदेन माया
असि पदेनेश्वरः श्वेतकेतुपदेन परमहंस इति परमहंस परिव्राजकाचार्यमतेन
स परमात्मा सत्तामात्रेण परापश्यन्तीमध्यमावैखरीरूपेण ब्रह्मणः
पश्चिममुखेनाभिव्यक्तिर्भवति काण्डत्रयं मन्त्रकाण्डः
ज्ञानकाण्डः कर्मकाण्ड इति सामवेदवाक्यनिरूपणं
सामवेदवाक्यपदत्रयव्याख्याननिर्णयो नाम द्वादशसिद्धान्तः ॥ १२॥

अयं शब्दनिर्णयोऽथर्वणवाक्यशब्दव्याख्यानं नाम त्रयोदशः सिद्धान्तः ॥ १३॥
अथाथर्वणवेदसम्बधिवाक्यार्थनिर्णयः सङ्क्षपेण कथ्यते
अयमात्मा ब्रह्मेति श्रुतेः अयं शब्दः प्रत्यभिज्ञानवचनः
सोऽयं देवदत्त इत्यादिवत् सृष्टेः पूर्वं सृष्टिमध्ये सृष्ट्यन्ते
सोऽयमात्मेति प्रसिद्धमेव परासृष्टिर्नाम प्रत्यक्षवचनमिदं
शब्देन च नित्यत्वं प्रतिपाद्यते यथाऽनन्ता
घटपटादृष्टाः पटास्तुभिन्नाः
सर्वथा न घटा यथा देहदृष्ट्या तथा देहिनामित्यवधारयति वाक्यवृत्तौ
तथा समस्तप्रपञ्चादृष्टाश्भिन्नाः पृथक् भूतः साक्ष्यवतिष्ठते
क इव सूर्य एकः स्वप्रकाशेन जगत्प्रकाशयति
तथेश्वरः स्वप्रकाशेन मायां प्रकाशयति
परस्परमनादि सम्बन्धेन स परमात्मा मूलप्रकृति साक्षिभूतोऽहङ्काकरसाक्षिभूत
आकाशवाय्वग्न्यप्पृथिव्यादि साक्षिभूतः श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणमित्यादि
पञ्चज्ञानेन्द्रियसाक्षिभूतः वाक्पाणिपाद-
पायूपस्थपञ्चकर्मेन्द्रियसाक्षिभूतो जाग्रत्स्वप्न-
सुषुप्त्यवस्थात्रयसाक्षिभूतः सत्त्वरजस्तमोगुणत्रयसाक्षिभूतः
अण्डजस्वेदजजरायुजोद्भिज्जादिकानां चतुर्णां साक्षिभूतो
ब्रह्मविष्णुरुद्रादि शेषनागपर्यन्त समस्तनानायोनिषु पृथक्जाति-
स्वभावरूपेण तिष्ठति तदभिन्नं परमात्मस्वरूपमनन्त-
कोटिब्रह्माण्डप्रकाशकं चिन्मात्रमवतिष्ठते
सोऽयं शब्दवाच्यः परपात्मा ब्रह्मेति यत् चैतन्यसत्तामात्रेण जगत्
चैतन्यं भवति क इव यथा सूर्यप्रकाशेन चक्षुःप्रकाशो भवति तत् चक्षुः
सूर्यावलोकनं करोति यथाऽग्निसत्तामात्रेण पात्रतापो भवति
तथा तत् सत्तामात्रेण समस्तावान्तरवर्त्तिनः पदार्थाः सचेतना भवन्ति
अत एवैकं ज्ञानं त्रिधा च भवति ब्रह्म स्वतश्चैतन्यं
स्वतःप्रकाशं स्वतन्त्रं चेति माया तदाश्रिता तद्विषया चैतन्यात्मा भवति
महदादि समस्तपदार्थो जडः स्वतश्चैतन्यपरतन्त्रो भवति
अत एव ब्रह्म व्यापकत्वेन मायाया अपि व्यापकत्वं भवति
कथं पदान्तरस्तदाश्रयात् विषयो भवति कार्यभागत्रयं व्यापकरूपं

महदादीनामपि ज्ञानं पूर्णज्ञाने ज्ञातृत्वं कथं भवति उपनिषद्वाक्यं प्रमाणं
आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः
साक्षिवत्कर्तृत्वेति मैत्रे होवाच याज्ञवल्क्य इति श्रुतेरेतत्सत्यं
अत एव देवतामवलक्ष्यते न तु सम्पूर्णं ज्ञायते
यथा घटाकाशो ज्ञायते तथा पूर्णाकाशोऽपि ज्ञायते
तथा सर्वमृत्तिकाप्यनुमीयते
तथाऽल्पजलेन महाजलं जानाति एवममुनाप्रकारेण नानाविधानि
जानीयात् अमुना प्रमाणेन बृहत्प्रमाणं यथा जानाति
तथाऽन्तःकरणचेष्टितं न चैतन्यं ज्ञायते हृदयकोशे
चिदादित्ये सदादि भाति निरन्तरमिति श्रुतेः हृदयकमलमध्ये
दीपवत् वेदसारं ज्योतिर्ज्ञायते
तथाऽयमात्मेति अयं शब्दः स्वप्रकाशं वदति
यथा सोऽयं देवदत्त इत्यनेन कालवस्तु भावावस्था
परित्यागेन केवलं देवदत्तस्वरूपमात्रं गृह्यते तथाऽयमात्मा
ब्रह्मेति शङ्करभाष्यप्रामाण्यात्
यथा अयं शब्द विशेषेण स्वप्रकाशत्वं स्वतश्चैतन्यत्वं स्वतन्त्रत्वमिच्छाशक्तित्वं
क्रियाशक्तिरूपत्वं चोत्पद्यते
ब्रह्मादिकीटपर्यन्त मशकेभ्यः समस्तप्राणिमात्रान्तर्यामित्वेन
शोधकशक्तिरूपत्वं सोऽयमात्मा शब्दादनुमीयते इत्ययं शब्दनिर्णयोऽथर्वण-
वाक्यशब्दव्याख्यानं नाम त्रयोदशः सिद्धान्तः ॥ १३॥

आत्मशब्दनिर्णयोऽथर्वणवेदार्थवाक्यगतात्मशब्दनिर्णयो नाम चतुर्दशसिद्धान्तः ॥ १४॥
अथात्मशब्दव्याख्याननिर्णयः कथ्यते
आत्मा जगदुत्पत्तिस्थितिविक्षेपरूपं निरूप्यते जगदङ्कुरकं
सच्चिदानन्दमापद्यत इति शङ्करभाष्यप्रामाण्यात्
तस्मात्पञ्चपृथिव्यादयः परमात्मनः समुत्पन्ना
आत्मन आकाशः सम्भूत आकाशाद्वायुर्वायोरग्निरग्नेरापः अद्भ्यः:
पृथ्वी पृथिव्या ओषधय ओषधिभ्योऽन्नं अन्नात्पुरुष इति श्रुतेः
तस्मात्कारणादात्मा समस्तजगदुत्पत्तिस्थानमनुमीयते अत
एवात्माऽनन्तकोटिब्रह्माण्डबीजरूपं संसारवृक्षस्वरूपं निरूप्यते
ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययं
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् इति भगवद्वाक्यं प्रमाणं
तथा च श्रूयते त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः
ततो विष्वङ्व्यक्रामत्साशनानशने अभि इति ऊर्ध्वं ब्रह्म
समस्तप्रपञ्चस्योपरि अन्तश्च नित्यं शुद्धं बुद्धं मुक्तेः
स्वभावं निर्गुणं निरामयं निरञ्जनं तस्य ब्रह्मणः शक्तिर्नवविधाय
कथ्यते सर्वज्ञभावमनादिबोधस्वतन्त्रामलिप्तशक्तिं
अनन्तशक्तिं च विभोर्विदित्वा षड्बाहुरङ्गानि महेश्वरस्य

इच्छाशक्तिः क्रियाशक्तिर्ज्ञानशक्तिस्त्रिशक्तयः एवं नवविधा शक्तिर्माया
स परमात्मा कथ्यते स
जगद्बीजभूत मूलकन्दस्वरूपं तस्य कन्दस्य त्रयोङ्कुरा भवन्ति
कालकर्मस्वभावा इति इतीति किं अङ्कुरत्रयात्
मूलप्रकृति वृक्षरूपस्योत्पत्तिः
तया मूलप्रकृत्या नवविधाः शाखा भवन्ति ताश्चेत्थं प्रथमा
शाखा महत्तत्त्वं द्वितीया शाखाऽहङ्कारस्तृतीया शाखा मनश्चतुर्थी
शाखा बुद्धिः पञ्चमी शाखा नभः षष्ठी शाखा वायुः
सप्तमी शाखाऽग्निरष्टमी शाखाऽपो नवमी शाखा पृथिवी इति-
नवविधाः शाखा अत्यन्त स्थूलरूपा अपरिमितास्तस्य वृक्षस्य शाखाः
प्रतिदशशतधा सहस्रधा भवन्ति तथा च तस्य वृक्षस्य विषयाः
पञ्चकर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थानि पञ्चज्ञानेन्द्रियाणि
श्रोत्रञ्चक्षुरसनानासिकात्वक् इति
दशशाखास्तस्यविषयाः पञ्चशब्दस्पर्शरूपरसगन्धा इति
वृक्षस्य गुणास्त्रयः सत्त्वं रजस्तम इति तस्य वृक्षस्य षड्रसाः
कट्वम्ललवणतीक्ष्णकषायमधुरा इति तस्य वृक्षस्य वर्णस्वरूपाणि
षट्शुक्लज्योतिः श्यामनीलस्तु श्वेतपीतेति
तस्य वृक्षस्य शाखा गुणौत्पत्तिश्चतुर्धा
अण्डजजरायुजस्वेदजोद्भिज्जा इति तस्य वृक्षस्य पर्णानि चतुर्धा
ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इति एतदेव ब्रह्मस्वरूपं
तत्र शब्दभेदाश्चतुर्दशविद्या उत्पत्तिस्थानानि
उपवेदा अष्टादशपुराणानि अष्टादशस्मृतयः
भारतं च काव्यं नाटकमलङ्कारसाहित्य सङ्गीत पिङ्गल ज्योतिष
वैदिकानि षड्दर्शनानि सर्वे साङ्ख्य मीमांसा वेदान्त न्याय वैशेषिकाः
पातञ्जल मन्त्रशास्त्राणि पर्णानि
तस्य वृक्षस्य पुष्पं नवप्रकारं श्रवणं कीर्तनं विष्णोः
स्मरणं पादसेवनम् अर्चनवन्दनं दास्यं सख्यमात्मनिवेदनम्
तस्य वृक्षस्य फलानि चत्वारि धर्मोऽर्थः कामो मोक्ष इति तस्य वृक्षस्य
विस्तारं किञ्चित् निरूप्यते मूलान्यनन्तानि नास्ति अन्तो येषां तानि
अनन्तानि अपारं अतिसूक्ष्ममतिस्थूलं देशकालवस्तुस्वरूपं
अपरिमितं मर्यादारहितं अनादिस्वरूपं स परमात्मा अनन्तकोटि-
ब्रह्माण्डाकारस्वरूपं जीवरूपं ज्योतिः
सर्वयोनिषु कौन्तेय मूर्तयः सम्भवन्ति याः तासां ब्रह्म
महद्योनिरहं बीजप्रदः पिता इति भगवद्गीतासु तच्च मूलं
अतिसूक्ष्मं वटबीजप्रायं यथा वटवृक्षबीजान्युल्लसन्ति
तेषां ब्रह्माण्डानां मध्य एकमेव ब्रह्माण्ड-
सङ्ख्या सङ्क्षेपेण ब्रह्मप्रकारेण निरूप्यते आनन्द-
मूलगुणपल्लवतत्त्वशाखा वेदान्तपुष्पफलमोक्षरसादि पूर्णः

चेतो विहङ्ग हरितुङ्गतरुं विहाय संसार
शुष्कविटपे वद किं रतोसि इति श्रुतेः
अन्त एवोर्ध्वमूलं उपरि मूलमधःशाखा कालकर्मस्वभाव
मूलप्रकृत्यादयः परस्परक्षोभेण समस्तप्रपञ्चा उल्लसन्ति
तत्रकाल उपादानं कर्मप्रेरकस्वरूपं स्वभावश्चैन्तन्यस्वरूपः ॥ ३॥

मूलप्रकृतिर्वैकारिकस्वरूप आत्माऽविनाशिस्वरूपः
कालकर्मस्वभावरूपो त एवात्मस्वरूपं जानीयात् मायाब्रह्मणश्छायावत्
छायावैकारिकस्वरूपः कालकर्मस्वभावात्मा स्वतन्त्रचैतन्यरूपः
स्वप्रकाशो नित्यमायातदाश्रितास्तद्विषया अनादिचैतन्यो नाद्यविद्या चात्र
किञ्चिदभेदोऽत्र गृहसम्बन्ध्यन्धकारो
यथा वृक्षसम्बधिनी वृक्षच्छाया यथाऽग्निसम्बधी धूमस्तथा
ब्रह्मसम्बधिनी माया त्रिगुणात्मिका ब्रह्मनिर्णयो विकारः
स्वतश्चैतन्यो मायागुणमयी नित्यचैतन्या माया
समवायरूपेण परिणमति वृक्षाकारेण स वृक्षः
कालकर्मस्वभावयोगेनानेकप्रकारेण वृद्धिं प्राप्नोति
प्रकृतिं पुरुषं चैव
विद्ध्यनादी उभावपि विकारांश्च गुणांश्चैव विद्धि
प्रकृतिसम्भवान् इति भगवद्गीतायाम्
अनुवृक्षस्थूलसङ्गभावश्च प्रतिषिद्ध्यते
सर्वत्रभयसंयुक्तः प्रकृत्यापुरुषेण चेति भागवते
आत्माशब्दो जगद्बीजाङ्कुरो वा सत्यम् एतस्मात् सततमतिसर्वत्र स्मृतय
आत्मा प्रथमाङ्कुरः कालो द्वितीयाङ्कुरः स्वभावो नाम जीवात्मेति
आत्मबीजं चतुर्द्धा ब्रह्मकूटस्थं प्रारब्धरूपेण विस्तारं प्राप्नोति
बीजरूपं ब्रह्म कूटस्था माया प्रारब्धं कर्मस्वरूपं कालोत्पत्तिस्थिति-
प्रलयस्वरूपजीवात्मक समस्तप्रपञ्चेनाचेतनस्वरूपो
चैतन्यो चैतन्याधिष्ठितश्चैतन्यं भवति
अत एव ब्रह्मचैतन्यं ब्रह्म चतुर्द्धा भवति
वासुदेवो बीजरूपेण सङ्कर्षणः कालरूपेण प्रद्युम्नः
कर्मरूपेणानिरुद्धो जीवरूपेण इति ब्रह्मरूपं माया पञ्चविंशति
तत्त्वात्मिका सा प्राप्य चतुर्धा ब्रह्म सम्पद्यते
समस्त व्यवस्था न महत्तत्वात्मकं संसारवृक्षाकारं तिष्ठति
अथ प्रथमं परिणामं निरूप्यते प्रथमं वैकुण्ठस्थानं महत्तत्त्वात्मकं
तन्मध्ये तु ज्योतिर्मयं तेजोमयं ज्ञानमयमानन्दमयं सुखमयं तस्य
वैकुण्ठस्याधिष्ठाताऽदिनारायणश्चतुर्भुजः
शङ्खचक्रगदापद्मकिरीटकुण्डलकौस्तुभवनमाला
मुद्रिका कङ्कणकटिसूत्रमेखलादि नानाभूषणभूषितः
कौशेयपरिवेष्टितः श्यामसुन्दरः कमलनयनः कमलचरणः

कमलहस्तो तिलावण्यवाननन्तकोटिशक्तिव्याप्तवान् वैकुण्ठाधीशः
सूर्यकोटिप्रकाशो यमकोटिदुरासद इत्यादि विशेषणसंयुक्तः
स भगवान् तस्य शक्तयोऽणिमामहिमागरिमेशत्वं
त्वशित्वं च प्रतिकाम्यमिच्छासिद्धिर्मुक्तिसिद्धिः
सर्वकामप्रदायिन्यः वैकुठस्य द्वारपाला अणिमादयः सिद्धयः
अत एव स वैकुण्ठनाथ एकाकी न रमते तत् द्वितीयमिच्छति
स एवात्मा द्विधा भवति पतिश्च पत्नी च स वैकुण्ठनाथः
शिवशक्त्यात्मको भवति श्रीश्च ते लक्ष्मीश्च पत्न्यौ अहोरात्रे पार्श्वेन
क्षत्राणि रूपमिति श्रुतिः अत एव लक्ष्मीनारायणात्मकं स्थित्युपलक्षणं
स वैकुण्ठनाथः सहस्रशीर्षाः पुरुषः सहस्राक्षः
सहस्रपात् इत्यादि नानाविशेषणेन विशेषितः स महापुरुषः सगुणं
ब्रह्मेत्युच्यते पुरुषोत्तम नाम त्रैलोक्यवासिनाश्चतुर्भुजा भवन्ति तेषां
स्त्री लक्ष्मीसदृश्यो भवन्ति तस्य वृक्षस्य
प्रथमविटपो वैकुण्ठो द्वितीयविटपः शिवलोकः तृतीयविटपः
सत्यलोकश्चतुर्थविटपो ब्रह्मलोकः पञ्चमविटपः
सूर्यलोकः षष्ठमविटपो यमलोकः सप्तमविटपो जनलोकोऽष्टमविटपो
भूर्लोको नवमविटपो नक्षत्रलोको दशमविटपश्चन्द्रलोक
एकादशविटपः सूर्यलोको द्वादशविटपः चन्द्रलोकः
त्रयोदशविटपोऽग्निलोकः चत्रुर्दशविटपो यमलोकः
पञ्चदशविटपो नैरृतिलोकः षोडशविटपो वरुणलोकः
सप्तदशविटपोऽष्टादशविटपः कुबेरलोकः
एकोनविंशतिविटप ईशानलोकस्तदनन्तरं मेरुबन्धिने विंशतिविटपः
सर्वे लोकाः एकविंशतिविटपो ब्रह्मलोकः ॥ २१॥

ब्रह्मलोकानन्तरं ऋषिरित्युच्यते ततोऽधः सप्तपाताललोकाः
शेषनागपर्यन्ता नानाविधप्रकारा स्थावरजङ्गमस्वरूपादेव मनुष्य-
तिर्यगादि कीटपतङ्गसमस्तविश्वात्मसत्तामात्रेणोल्लसन्ति
न वाऽरे पुत्राणां कामाय पुत्राः प्रिया भवन्ति
आत्मनस्तु कामाय पुत्राः प्रिया भवन्ति इति श्रुतेः
आत्मशब्देन समस्तजगदुत्पत्तिस्थानं सत्यस्वरूपमुच्यते
आत्मव्यतिरेकेण किञ्चिदपि नास्ति सर्वं विष्णुमयं जगदिति
अत एव सर्वं खल्विदं ब्रह्म इत्यात्मव्यतिरेकेण
सर्वपदार्था जडरूपा एवं यत्र चैतन्यं तत्राऽत्माधिष्ठानेन
सर्वं चैतन्यं भवति जडत्वं नास्ति सात्मज
गतबीजरूपेण वैकुण्ठादि शेषनागपर्यन्तं स्थावरजगमात्मकं
जगदात्मा वेति आत्मशब्दनिर्णयोऽथर्वणवेदार्थ-
वाक्यगतात्मशब्दनिर्णयो नाम चतुर्दशसिद्धान्तः ॥ १४॥

वेदान्तप्रकरणेऽथर्ववेदवाक्यगतात्मब्रह्मशब्दनिर्णयो नाम पञ्चदशसिद्धान्तः ॥ १५॥
अथ परब्रह्मनिर्णयः कथ्यते बृहत्वात् ब्रह्म
अणु बृहत् कृशं स्थूलं इत्ययं धर्मो ब्रह्मणि प्रवर्त्तते
बृहत्वाच्च सर्वव्यापकत्वं ब्रह्मणि प्रतिपाद्यते
आकाशवत् पूर्णम् आत्मनिवेद्यमखण्डदण्डायमानं सर्वानुस्यूतं
समो नागे न समो मशकेन सम एभिस्त्रिभिर्लोकैरिति श्रुतेः
स्वप्रकाशात्मकस्वरूपं समस्तप्रपञ्चगोचरं तथा
भातिमे यतो वाचो निवर्त्तन्ते इति श्रुतेः
केवल साक्षिस्वरूपं ब्रह्म जाग्रदवस्थासाक्षि सुषुप्त्यवस्थासाक्षि
पञ्चकर्मेन्द्रियसाक्षि पञ्चज्ञानेन्द्रियसाक्षि पञ्चमहाभूतसाक्षि
अन्तःकरणचतुष्टयसाक्षि इति श्रुतेः
अत एव वासुदेवनामानन्तकोटिब्रह्माण्डसाक्षीभूतोऽनन्तकोटिब्रह्माण्ड-
प्रतिपालकोऽनन्तकोटिब्रह्माण्डहर्त्ता बृहत्वात् ब्रह्म शब्द
उच्यते अत एव ब्रह्म शब्द सर्वत्रानुस्यूतो ज्ञानमयं चैतन्यमुच्यते
अहं ब्रह्माहमस्मि एतद्ब्रह्म ओं तत्सत्यं सोऽयं पुरुषश्चासौ
आदित्यैकमेव तदिति विद्यते इति प्रज्ञाप्रतिष्ठितमात्रेण
सत्यस्वपिहिता मुखं योसावादैत्येव पुरुषः
सोऽसावहं ओं सत्यं खं ब्रह्म इति श्रुतेर्वाक्येभ्यः
प्रसिद्धं ब्रह्मेत्युच्यते उदरं ब्रह्मेति शाकाराख्य उपारभ्यते
हृदये ब्रह्मेत्यारोप्य ब्रह्म अयमेव इति श्रुतेः
अत एव केवलं शून्याच्छून्यतरं सूक्ष्मात्सूक्ष्मतरं
व्यापकाद्व्यापकतरं प्रकाशात्प्रकाशतरं
ज्ञानात् ज्ञानतरं नित्यात् नित्यतरं ध्येयाद्ध्येयतरं
ईश्वरादीश्वरतरं तत्त्वात् तत्त्वतरं स्थूलात्स्थूलतरं
आनन्दादानन्दतरं सुखात्सुखैतरं चैतन्यात् चैतन्यतरं
रूपाद्रूपतरं ज्योतिषो ज्योतितरं ज्योतिषामपि तज्ज्योतिस्तमसः
परमुच्यते इति स्मृतिवाक्येभ्यो ब्रह्मानिर्वचनीयमिदं ब्रह्म तादृशमेतत्
इति चतुरन्नं भवेत् ब्रह्म तदित्येव ध्येयनोचेद्विषयो भवेत्
परोक्ष च इति शङ्कराचार्योक्तैश्च वाङ्मनोगोचरातिगः
इत्याथर्वणवाक्यगतात्मशब्दनिर्णयेन काण्डत्रयं ज्ञानकाण्डं
मन्त्रकाण्डं कर्मकाण्डम् ॥ ३॥

ब्रह्मोपासनायैह्युपयुज्जते परापश्यन्तीमध्यमावैखरीरूपेणाव्यक्तमपि
ब्रह्मशब्दस्वरूपेण आत्मानमभिव्यक्तं करोति
अथर्वणवेद साङ्ख्यदर्शन पाताञ्जलदर्शनोपदर्शन
मन्त्रशास्राणि इति सङ्क्षेपात् ब्रह्मस्वरूपं निरूप्य
वेदान्तप्रकरणेऽथर्ववेदवाक्यगतात्मब्रह्म
शब्दनिर्णयो नाम पञ्चदशसिद्धान्तः ॥ १५॥

इति परमहंस परिव्राजकाचार्य शङ्करेण कृतं
द्वादशमहावाक्यविवरणं सम्पूर्णम् ॥

इति श्रीमहावाक्यविवरणं सम्पूर्णम् ॥

इदं पुस्तकं श्रीकृष्णदासात्मजाभ्यां
गङ्गाविष्णुक्षेमराजाभ्यां शास्त्रिभिः संशोध्य मुम्बय्यां स्वकीये
``श्रीवेङ्कटेश्वराख्य" मुद्रणालये मुद्रितम्
शकाब्दाः १८१२ संवत् १९४७